॥ यमुनास्तवम् ॥
गर्गसंहितान्तर्गतम्

मान्धातोवाच -
यमुनायाः स्तवं दिव्यं सर्वसिद्धिकरं परम् ।
सौभरे मुनिशार्दूल वद मां कृपया त्वरम् ॥ १॥

श्रीसौभरिरुवाच -
मार्तण्डकन्यकायास्तु स्तवं शृणु महामते ।
सर्वसिद्धिकरं भूमौ चातुर्वर्ग्यफलप्रदम् ॥ २॥

कृष्णवामांसभूतायै कृष्णायै सततं नमः ।
नमः श्रीकृष्णरूपिण्यै कृष्णे तुभ्यं नमो नमः ॥ ३॥

यः पापपङ्काम्बुकलङ्ककुत्सितः कामी कुधीः सत्सु कलिं करोति हि ।
वृन्दावनं धाम ददाति तस्मै नदन्मिलिन्दादि कलिन्दनन्दिनी ॥ ४॥

कृष्णे साक्षात्कृष्णरूपा त्वमेव वेगावर्ते वर्तसे मत्स्यरूपी ।
ऊर्मावूर्मौ कूर्मरूपी सदा ते बिन्दौ बिन्दौ भाति गोविन्ददेवः ॥ ५॥

वन्दे लीलावतीं त्वां सघनघननिभां कृष्णवामांसभूतां
वेगं वै वैरजाख्यं सकलजलचयं खण्डयन्तीं बलात्स्वात् ।
छित्वा ब्रह्माण्डमारात्सुरनगरनगान् गण्डशैलादिदुर्गान्
भित्वा भूखण्डमध्ये तटनिधृतवतीमूर्मिमालां प्रयान्तीम् ॥ ६॥

दिव्यं कौ नामधेयं श्रुतमथ यमुने दण्डयत्यद्रितुल्यं
पापव्यूहं त्वखण्डं वसतु मम गिरां मण्डले तु क्षणं तत् ।
दण्ड्यांश्चाकार्यदण्ड्या सकृदपि वचसा खण्डितं यद्गृहीतं
भ्रातुर्मार्तण्डसूनोरटति पुरि दृढस्ते प्रचण्डोऽतिदण्डः ॥ ७॥

रज्जुर्वा विषयान्धकूपतरणे पापाखुदर्वीकरी ।
वेण्युष्णिक् च विराजमूर्तिशिरसो मालास्ति वा सुन्दरी ।
धन्यं भाग्यमतः परं भुवि नृणां यत्रादिकृद्वल्लभा ।
गोलोकेऽप्यतिदुर्लभातिशुभगा भात्यद्वितीया नदी ॥ ८॥

गोपीगोकुलगोपकेलिकलिते कालिन्दि कृष्णप्रभे
त्वत्कूले जललोलगोलविचलत्कल्लोलकोलाहलः ।
त्वत्कान्तारकुतूहलालिकुलकृज्झङ्कारकेकाकुलः

कूजत्कोकिलसङ्कुलो व्रजलतालङ्कारभृत्पातु माम् ॥ ९॥

भवन्ति जिह्वास्तनुरोमतुल्या गिरो यदा भूसिकता इवाशु ।
तदप्यलं यान्ति न ते गुणान्तं सन्तो महान्तः किल शेषतुल्याः ॥ १०॥

कलिन्दगिरिनन्दिनीस्तव उषस्ययं वापरः
श्रुतश्च यदि पाठितो भुवि तनोति सन्मङ्गलम् ।
जनोऽपि यदि धारयेत्किल पठेच्च यो नित्यशः
स याति परमं पदं निजनिकुञ्जलीलावृतम् ॥ ११॥

इति श्रीगर्गसंहितायां माधुर्यखण्डे श्रीनारदबहुलाश्वसंवादे
श्रीसौभरिमान्धातृसंवादे श्रीयमुनास्तवो नाम सप्तदशोऽध्यायः ॥ १७॥